श्रीजगद्गुरुपञ्चाचार्याः प्रसीदन्तु

शिवधर्मग्रन्थमालायाः

विंशतितमं पुष्पम् (२०)

श्रीपतिपण्डिताचार्यप्रणीतम्

ब्रह्ममीमांसा सूत्र—

# श्रीकरभाष्यम्

## ( चतुःसूत्री )

वेद-काव्य-स्मृतितीर्थ-धर्माचार्य-विद्यानिधि

कै० पं० श्रीचिदिरेमठीयवीरभद्रशर्मणा

परिष्कृतम्

प्रकाशकः

काव्यतीर्थ-मीमांसाशास्त्री-वेदान्ताचार्य

वैराग्यमठीय श्रीपञ्चाक्षरशिवाचार्यः

जंगमवाडीमठस्थशैवभारतीभवनम्

श्रीक्षेत्रकाशी

[illegible]५६ ई० ] [ मूल्यम् १। रु०

श्रीजगद्गुरुपञ्चाचार्याः प्रसीदन्तु

शिवधर्मग्रन्थमालायाः

विंशतितमंपुष्पम् (२०)

श्रीपतिपण्डिताचार्यप्रणीतम्

ब्रह्ममीमांसा सूत्र—

# श्रीकरभाष्यम्

## ( चतुःसूत्री )


वेद-काव्य-स्मृतितीर्थ-धर्माचार्य-विद्यानिधि

कै० पं० श्रीचिदिरेमठीयवीरभद्रशर्मणा

परिष्कृतम्



प्रकाशकः

काव्यतीर्थ-मीमांसाशास्त्री-वेदान्ताचार्य

वैराग्यमठीय श्रीपञ्चाक्षरशिवाचार्यः

जंगमवाडीमठस्थशैवभारतीभवनम्

श्रीक्षेत्रकाशी

१९५६ ई० ]

[ मूल्यम् १। रु०

# निवेदनम्

सुप्रथितमेवैतत्—सनातनवैदिकवीरशैवमतमतिविस्तृतं लब्धसुयशश्चेति। वीरशैवमतस्थापकैः रेणुकादिनामधेयैः पञ्चभिराचार्यवरैः त्रीणि दक्षिणप्रदेशे, द्वे उत्तरप्रदेश इति पञ्चपीठानि स्थापितानि । तत्रैकं विश्वाराध्यसिंहासनाख्यं 'ज्ञानपीठं' चिरात् खलु श्रीक्षेत्रवाराणस्यां जंगमवाटिकापरपर्याये हरिकेश-नंदनवने विराजते। ज्ञानपीठार्थं—श्री काशीनरेशजयनन्ददेव—मुगलसम्राट् अकबर—हुमायूँ—औरंगजेबप्रभृतिभिः प्रदत्तानि दानशासनानि समवलोक्येदं विश्वाराध्यसिंहासनाख्यज्ञानपीठं प्राचीनतममित्युत्तरप्रदेशीयैः प्रधानन्याया-धीशैरप्यंगीकृतमस्ति । ज्ञानपीठस्थ—'शिवधर्मग्रंथमाला'—द्वाराऽद्यावध्येकोन-विंशतिपुष्पाणि प्रकाशितानि । इदं च श्रीकरभाष्यं वीरशैवसिद्धान्तसारभूतमेवं शिवधर्मसिद्धान्तग्रन्थमणिकौस्तुभरूपमित्यत्र नास्ति विचिकित्सालवोऽपि। साम्प्रतमस्य 'चतुःसूत्री'—प्रकाशनमपि सन्तोषप्रदमेव। अचिरादेव समग्रस्यास्य ग्रन्थरत्नस्यापि प्रकाशनं भविष्यतीति निश्चप्रचम् ।

परवादिनागकेसरिणा श्रीपतिपण्डितभगवत्पादाचार्येण विरचितं श्रीकरभाष्यमितः प्राग् मैसूरनगरे कै० श्री पं० काशीनाथशास्त्रिमहोदयेन संशोध्य कर्नाटकाक्षरे, एवञ्च श्रीमत्पण्डितवर्यैः वीरभद्रशर्मभिः ( भूतपूर्व-काशीज्ञानपीठाधीश्वरश्रीजगद्गुरु-वीरभद्र शिवाचार्य महास्वामिभिः ) चतुः-सूत्रीपर्यन्तं आन्ध्राक्षरे प्रकाशितमिति बुधजनबुद्धिगतोऽयं विषयः।

श्रीहयवदनरायमहोदयेनापि ग्रंथस्यास्य सम्पादनं कृतम्, किन्तु तत्रस्थदोषबाहुल्यं तस्य संस्कृतानभिज्ञतामेव प्रकटयतीति विदुषामाशयः।

भगवत्पादाचार्यश्रीमद्भाष्यकारकालनिर्णयविषये सविमर्शं पुस्तक-मेकमचिरादेव प्रकाशितव्यमिति पण्डिताग्रेसराणां भूतपूर्वश्रीमज्जगद्गुरु-वीरभद्रमहास्वामिनां संकल्प आसीत्, किन्तु दैवदुर्विपाकात् ते असमय एव कैलासवासिनोऽभवन्। अतस्तैरान्ध्राक्षरे प्रकाशितं 'वास्तविक'—मेवात्र नागराक्षरे स्वीकृतमस्ति ।

विद्यमानकाशीज्ञानपीठाधीश्वरश्रीमज्जगद्गुरुश्री विश्वेश्वरशिवाचार्यमहा-स्वामिनोऽपि पूर्वाचार्यप्रदर्शितपथेनाऽनवरतप्रयत्नपूर्वकं सविमर्शं शिवधर्म-सिद्धान्तग्रन्थप्रकाशने बद्धपरिकरा इति परमानन्दकरोऽयं विषयः।

साधवो विद्वांसो निष्पक्षपातमतिमहत्तामापन्नस्यास्य शिवधर्मसिद्धान्त-ग्रन्थरत्नस्य सम्यगवलोकनेनानुगृह्णन्त्विति भृशमभ्यर्थयते।

श्रीनृपशालिवाहन-<br>
शकाब्दीय (१८७७)<br>
श्रीमन्मथसंवत्सर-<br>
फाल्गुनशुक्लत्रयोदश्याम्<br>
श्रीजगद्गुरुरेणुकाचार्य-<br>
जयन्त्युत्सवे।

विद्वज्जनविधेयः

वैराग्यमठीयश्रीपंचाक्षरशिवाचार्यः,<br>
वेदान्ताचार्यः

# वास्तविकम्

प्रपञ्चपरमार्थैक-कारणं मारमारणम् ।
प्रपद्ये परमेशानं भवपाशनिवारणम् ॥

श्रीमत्परवादिगजाङ्कुशायमानेन आराध्यपादपद्मेन अशेषशास्त्रशेमुषीधुरन्धरेण श्रीपतिपण्डितभगवत्पादाचार्येण प्रणीतं ब्रह्ममीमांसासूत्रव्याख्याप्रायं श्रीकरभाष्यं, शिवधर्मसिद्धान्तस्थापकेषु ग्रन्थरत्नेषु मूर्धानमधिरोहतीति विपश्चिदपश्चिमाः प्रमाणम् । चिरादस्य प्रकाशने साकाङ्क्षं मच्चेत इत्यत्र न किञ्चिद्विचिकित्सितव्यम् । यदद्य कश्चिद्धर्षलवमप्यनुभवति, तत्र अल्पमप्येतत्प्रकाशनं निदानम् । केनापि दैवदुर्विपाकेन साम्प्रदायिकानामौदासीन्येन वा महार्घमप्येतद्भाष्यमन्धेतमसि निगूढं नवसङ्ख्याकान् शताब्दान् [ ९०० ] व्यनीयतेति नाश्चर्यकरं विज्ञातदशानाम् । विच्छिन्नपठनपाठनादस्य भाष्यस्य लिखितग्रन्था अपि केचिदेव द्वित्राः समुल्लसन्त्यान्ध्रविषये । परिष्करणार्थमवलम्बितानि आदर्शपुस्तकान्यत्रोदाह्रियन्ते । तद्यथा—

( १ ) सिकिन्द्राबादवैद्यनागलिंगप्पमहाशयप्रदत्तं द्विसम्पुटात्मकं सम्पूर्णं कर्गजलिखितं, लेखनदोषजुष्टम् ।

( २ ) सिकिन्द्राबादनगरे १८९३ तमे ईशवीयाब्दे आन्ध्राक्षरैर्मुद्रितं द्विशतपत्रपर्यन्तं असंस्कृतमशुद्धिबहुलं असम्पूर्णम् ।

( ३ ) लिङ्गंपल्लि—शिवकोटिवीरभद्रार्यमहाशयप्रदत्तं तृतीयपादपर्यन्तं लिखितं दोषभूयिष्ठं सुन्दराक्षरम् ।

एतत्पुस्तकत्रयप्राप्त्यनन्तरं परिष्कृतभाष्यप्रकाशनाय सोत्साहं मनश्चिरात्सप्रयत्नमासीत् । पण्डितवर्यैः श्रीकाशीनाथशास्त्रिभिरेतद्भाष्यचतुःसूत्री, अत्रान्तर एव संशोध्य प्रकाशनमानीतेति प्रमोदस्थानम् ।

तदन्वविलम्बितमेव 'विभूति' मासपत्रिकायामस्मदीयायां चतुःसूत्रीभाष्यस्यास्य प्रकाशनं प्रत्यक्रमारब्धम् । तथाप्यनाश्रयतया चतुःसूत्र्याः समाप्तिदर्शनं न विभूतिपाठकैराप्तम् । निवेदितैतद्वृत्तान्ताः श्रीमन्तः शिवस्वरूपिणो

देविडीसंस्थानाधीश्वराः कन्दुकूर्यन्वयाम्बुधिकुमुदबान्धवाः श्रीमद्बालसूर्यप्रसादरायबहद्दर्महाशयाः नूनं मुदितान्तरङ्गा अस्य ( आन्ध्राक्षरे ) प्रकाशनसाहाय्यप्रदानेन जनस्यास्य प्रयत्नमभिनन्दुः। सोऽयं चतुःसूत्रीभागोऽद्य सुधीजनचक्षुर्गोचरतां सविनयमानीत इति किमु वक्तव्यम्। परिष्करणे—तत्तच्छ्रुतिनिर्देशे च कियान्वा परिश्रम—इति, पूर्वमुद्रितमान्ध्राक्षरग्रन्थमिमं च सविमर्शमालोकयद्भ्यश्चक्षुष्मद्भ्यो न निवेदनीयमवशिष्यते।

## श्रीपतिपण्डिताचार्यवृत्तम्

भाष्यकारोऽयमात्मनिवासपुण्येन आन्ध्रविषयस्थं विजयवाटिका (बेजवाड) नगरमनुजग्राहेति सुप्रसिद्धोऽयं वृत्तान्तः। श्रीपतिपण्डिताचार्यस्य श्रीपतिपण्डिताराध्य इत्यपि सामान्यो व्यवहारः। ग्रन्थादौ अष्टमश्लोकादारभ्य दशमश्लोकं यावत् वीरशैवमतस्थापकेषु श्रीजगद्गुरुरेणुकादिपञ्चाचार्येषु तृतीयस्य श्रीमदेकोरामजगद्गुरोः महाप्रभावद्योतकं यत् स्तोत्रं निबद्धम्, तदस्य भाष्यकारस्य श्रीपतिपण्डितस्य श्रीमदेकोरामाचार्यशिष्यपरम्परात्वं भृङ्गिगोत्रित्वं च प्रकटयति। अस्य सहजवीरशैवत्वं तु बाढमुररीक्रियते। आगन्तुकता न कैश्चिच्छङ्कनीयाऽस्य। निराभारि ( परिव्राजक) तास्वीकारात्प्रागयं गृहस्थो ब्रह्मचारी वेति न निर्णीयते, तथापि विद्यानाथोऽयमाचार्यो विपुलयाऽनेकया छात्रसम्पत्त्या रराजेत्यत्र न सन्दिह्यते। परःशतैः पण्डिताचार्यैः साकं कृतबहुशास्त्रार्थः, संस्थापितस्वसिद्धान्तोऽयं भाष्यकारः—

श्रीमद्रामानुजाचार्यस्य श्रीभाष्यं (......) आक्षिप्य "श्रीकरं भाष्यम्" किञ्चिदपूर्वं ललितमधुरं स्वकीयमेव प्रणिनायेति महान् प्रवाद आन्ध्रवीरशैवपण्डितेषु। अग्रिमया कालचर्चया चास्य विशेषं वृत्तं संलक्ष्येत।

## भाष्यनिदानम्

श्रीकरभाष्यप्रणयने मूलमगस्त्यवृत्तिरिति श्रीपतिः स्वयमुवाच षोडशे श्लोके। रामानुजस्तु स्वभाष्यस्य बौधायनवृत्तिं निदानं जगाद। वृत्तिद्वयमपीदमद्य न द्योतते भारते। किं किं नु खलु कालः करालः स्वकुक्षौ न चिक्षेप?

श्रीकरभाष्ये सामान्यतो निगमागमोपनिषत्पुराणेतिहासप्रमाणानामुपन्यासस्तु-मुल एव। तथापि, येषामेव सदा मनननिदिध्यासनाभ्यासस्य श्रीपतेर्भाष्यरच-नापटिमाऽऽविरासीत् तेषां शिवधर्मग्रन्थानां अद्यालभ्यप्रायाणां तत्तदाचार्य-कृतीनां च नामानि अस्य चतुस्सूत्रीग्रन्थस्य पृष्ठानुसारेण सूच्यन्ते—

| | | | |
|---|---|---|---|
| वातूलागमः | २ | शाम्भवानन्दाराध्यभाष्यम् | ३८ |
| अगस्त्यवृत्तिः | २ | कैवल्यप्रकाशः | ४० |
| ऐश्वर्यशाखा | १४ | शिवज्ञानचन्द्रोदयः | ४० |
| सिद्धान्तागमः | १९ | दूर्वासीयवृत्तिः | ४१ |
| कैवल्यचन्द्रोदयः | ३१ | ज्योतिर्नाथभाष्यम् | ४६ |
| रेणुकभाष्यम् | ३२ | घण्टानाथभाष्यम् | ४६ |
| दारुकभाष्यम् | ३२ | भीमनाथभाष्यम् | ४६ |
| शङ्कुकर्णभाष्यम् | ३२ | शिवाद्वैतप्रकाशः | ५६ |
| गोकर्णभाष्यम् | ३२ | शिवधर्मशास्त्रम् | ६८ |
| शिवागमः | ३४ | शिवरहस्यम् | ६८ |
| एकोरामभाष्यम् | ३७ | वीरागमः | ७० |

एतेन श्रीपतिपण्डितभगवत्पादाचार्यस्य महदध्ययनं स्वसमयनिष्णातत्वं च व्यज्यते। ग्रन्थेष्वेतेषु केषाञ्चिदेव नामानि वीरशैवपण्डितैरपि श्रवणगोचरीकृ-तानि, द्वित्राणां प्रत्यक्षतापि। परमतीयपण्डितानां कृते पुनः किमु वक्तव्यम्?

श्रीपतिपण्डिताराध्यभगवत्पादस्तु धन्यतमः सम्भाव्यते, यस्य जन्म परः-सहस्रेषु स्वमतग्रन्थेषु सत्सु सुभिक्षकालेऽभूत्, अतएव महान् प्रमाणप्रवाहोऽनि-रुद्ध इव भाष्येऽस्मिन् परसिद्धान्तभूजान् निःशङ्कम् पातयति। साकल्यस्य अस्य भाष्यस्य यद्याशु प्रकाशनं भवेत् तर्हि ब्रह्मसूत्रार्थपरिशीलकानां विदुषां चेतसि किंचिदपूर्वमेव सञ्जीवनं सञ्जायेत।

भट्टभास्करस्य श्रीकण्ठाचार्यस्य च ब्रह्मसूत्रभाष्यप्रभावः श्रीकरभाष्ये तत्र तत्रातिसूक्ष्मः प्रतीयते, तथापि स्वतन्त्र एव अयं स्थापनामार्गः श्रीपतेः श्रीकर-भाष्ये गम्भीरतरं वैदुष्यमुद्धाटयतीति न तिरोहितं मतिमताम्। "नीलकण्ठशि-वाचार्यनाम्ना भाष्यमचीकरत्" इति क्रियासारस्मरणात् शिष्टपरम्परया जनश्रु-त्या च नीलकण्ठभाष्यमेव वीरशैवभाष्यत्वेन लब्धप्रतिष्ठं चिरादवगम्यते। किन्तु तदधुना न केनापि विदुषा लभ्यते। केचित्तु श्रीकण्ठभाष्यमेव नीलकण्ठभाष्य-

मिति मन्यन्ते, नास्माभिस्तत् समर्थ्यते। श्रीकण्ठभाष्ये वीरशैवीयानां आचार्याणां, ग्रन्थानां, षट्स्थलादीनां लेशतोऽप्युल्लेखनाभावात् न तल्लिङ्गधारिशक्तिविशिष्टाद्वैतवादिनां स्वकीयं भवितुमर्हति। रेणुकादिप्राचीनाचार्यभाष्याणामवलम्बनं शिवागमधर्मस्थापनं चात्र श्रीकरभाष्ये वैशद्येनोपलभ्यते। परम्पराभिमतत्वात् प्रत्यक्षप्रमाणत्वाच्च श्रीकरभाष्यमेव नीलकण्ठभाष्यानन्तरं ( यदि लभ्यते ? ) वीरशैवजगति सिद्धान्तस्थापनप्रामाण्याय सर्वैः स्वमतीयैर्मस्तकन्यस्तहस्तस्तवकपुरःसरं समाद्रियते।

## भाष्यकारकालचर्चा।

श्रीपतिपण्डितस्य स्थितिकालविषये कैश्चिदसाम्प्रदायिकैः सन्दिह्यते। समाधेयांशः संक्षिप्यात्र प्रकाश्यते। श्रीकरभाष्यस्य चतुःसूत्र्याः ६०तमपृष्ठे भट्टभास्करस्य, प्रथमाध्यायप्रथमपादे २१ सूत्रभाष्ये नीलकण्ठस्य, द्वितीयाध्यायप्रथमपादे २२ सूत्रभाष्ये श्रीकण्ठस्य, द्वितीयाध्यायद्वितीयपादे ४२ सूत्रभाष्ये रामानुजस्य च नामग्रहणादयं श्रीपतिः, नीलकण्ठ—भट्टभास्कर—श्रीकण्ठ—रामानुजादिभ्य अर्वाचीन इति निःशङ्कम् निर्णयः। नीलकण्ठस्य विषये तु "सोऽतिप्राचीनः" इत्येव अङ्गीकर्तव्यम्, तत्कालनिर्णयसाधनानुपलब्धेः। भट्टभास्करस्तु क्रि. श. दशमशताब्दीय इति राद्धान्त एव। अत एव डा. सर. एस्. राधाकृष्णमहाशयः "इण्डियन्—फिलासफीं" नामके स्वग्रन्थे "ब्रह्मसूत्रभाष्यप्रणेता भास्करः क्रि० श० ९०० अब्दे आसीत्, यतोऽस्य मतं क्रि. श. ९८० अब्दीयेन कुसुमाञ्जलिकारेण उदयनाचार्येण विमर्शितम्" इति लिलेख।

Bhaskara wrote a commentary on the Brahma Sutra called Bhaskara Bhashya about 900 A. D. His views are attacked by Udayana in his Kusumanjali ( A. D. 980. )
( Indian Philosophy Vol. II Page 670 )

श्रीकण्ठाचार्यकालोऽपि क्रि. श. १०६४ अब्द इति अघोरशिवाचार्यकृते महोत्सवविधौ स्वकालस्य क्रि. श. ११५४ अब्दत्वेन निर्देशात्, श्रीकण्ठस्य स्वप्रपितामहत्वकथनाच्च निश्चीयते। श्री एस्. एस्. सूर्यनारायणशास्त्रि—विरचिते "शिवाद्वैत आफ श्रीकण्ठ" ( Sivadwaita of Sreekantha ) इति नाम्नि पुस्तके तथैव श्रीकण्ठाचार्यस्य दशमशताब्दीयत्वं प्रतिपादितम्।

रामानुजाचार्यः क्रि. श. १०१७ अब्दे बभूवेति विद्वद्भिः श्रुतमेव' अतो भास्कर-श्रीकण्ठ-रामानुजेभ्योऽनन्तरमेव श्रीपतिपण्डिताचार्य एतच्छ्रीकर-भाष्यं जग्रन्थेति निरापदम् । अत्र काश्चिदुपपत्तयः प्रदर्श्यन्तेः—

वीरशैवेषु पण्डितत्रयप्रशंसातु प्रायः श्रूयते "श्रीपतिपण्डित-मंचनपण्डित-मल्लिकार्जुनपण्डित-" व्यक्तित्रयमेवात्र तत्पण्डित-त्रयमित्यपि निर्विवादम् । क्रि. श० ११९५ तमाब्दीयः पाल्कुरिकिसोमनाथकविः स्वान्ध्रपण्डिताराध्यचरित्रदीक्षाप्रकरणारम्भे, पण्डितत्रयमेवं प्रशशंस,—

"हरभक्तियुत्पत्तिकधिपतिनागबरगेनु दोल्लिश्रीपतिपण्डितय्य ।
चेनसि भक्तिक्रियास्थितिकर्तयनगजनि येनु लेंकमंचनपंडितय्य ।
दूरान्यसमयसंहारुडै चनियेशूरुडु मल्लिकार्जुनपंडितय्य ।
ख्यापितभक्तिकिकारणपुरुषुलै पण्डितत्रयं बनभुवि जनिरि ।"

अनेन मल्लिकार्जुनपण्डितोऽपि पा. सोमनाथात्पूर्वं क्रि. श. ११६० अब्दे आसीदिति आन्ध्रचरित्रचतुरैर्निर्णीतम् । मल्लिकार्जुनपंडिताराध्यकृतिस्तु "शिव-तत्त्वसारमु" इतिनाम्ना आन्ध्रवाचि सुप्रसिद्धा, आन्ध्रसाहित्यपरिषदा प्रकटिता च । तत्रस्थात् ४०६ तमपद्यात् श्रीपतिपण्डितस्य अग्निस्तम्भनकथा, शास्त्रार्थ-विजयश्च प्रतीयते, यथा—कं. ।

"ओक्कडे दैवमुशिवुडनि
निक्कमु संयुटकु मुडिचे निप्पुलु सीरन् ।
लुक्कक श्रीपतिपण्डितुं
डक्कजमुग विजयवाड नलजम्मिशिवा !"

( शिवतत्त्वसार ४०६ पद्यम् )

कथामिमां पा. सोमनाथोऽपि कथयामास ।

"भक्तुण्डु श्रीपतिपण्डितुण्डीशुभक्तुनि किल गोटि ब्राह्मणुलैन नेन यन्न नालुकने गोसिवैतननुचुननन्तपालुनि सभास्थलिनि"

( आन्ध्रबसवपुराणसप्तमाश्वासे )

अनन्तपालास्थाने श्रीपतिपण्डितः परान् पराभवं प्रापयामासेति वृत्तान्तः कमपि प्राचीनमितिहासं स्मारयति । अनन्तपालो नाम राजा चालुक्यत्रिभुवन-मल्लदेवसामन्तः सन् विजयवाटिका ( Bezwada )–गुंटूरु-कर्नूल आदि-मण्डलमण्डितं आन्ध्रप्रदेशं, बनवास्यादि कर्णाटकदेशं च क्रि० श० ११ तमे शताब्दे परिपालयामासेति Inscriptions of Madras Presidency Vol. II ग्रन्थे, ३०५ संख्याक-गुण्टुरुशासनात्, ३५१ संख्याककर्नूलशासनात्, South Indian Inscriptions of Govt. of India Vol. IV ग्रन्थस्य ४८९ पृष्ठस्थितशासनात्, Epigraphia Carnatica Vol VII ग्रन्थे शिकारपुरीयेभ्यः १३, ९८, ९९, १३१, १४९ शासनेभ्यश्च बाढं प्रतीयते । सर्वमिमं प्रमाणसमवायं समालोच्यैव स्यात्, श्री. टी. एस. नारायणशास्त्रिणा बी. ए. बी. एल. पद्वीधरेण The Indian Review. Vol 16. May 1915 No. 5 नाम्नि मासपत्रे "The Five Great Schools of Vedanta Philosophy इत्यभिधो लेखः प्रकाशितः, तद्यथा—

"Of these eleven Schools of Vedanta philosophy, those of **Shankara, Srikanta, Ramanuja, Srikara** and **Maddhwa** are the most important and constitute the Five Great Schools of Vedanta Philosophy. Of these, Shankara belongs to the end of the 6th Century B. C. ( born 509 B. C. ) Srikantha was a contemporary of the Second Great Shankara, the 38th Acharya or successor of Adi Shankara who was born in 788 A. D., and who is unfortunately mistaken for Adi Shankara and belongs to the latter part of the 8th Century A. D. Ramanuja belongs to the earlier part of the 11th century A. D. ( born 1017 A. D. ) Srikara

and Maddhwa respectively belong to the latter half of the 11th century and the earlier half of the 12th Century A. D. ( Srikara having been born in 1072 A. D., and Maddhwa in 1119 A. D. ) "

उपलब्धप्रमाणैरेतैः अनन्तपालराजस्य श्रीपतिपण्डितस्य च समकालिकत्वं क्रि० श० १०७२ तमेऽब्दे स्थितित्वं च सुदृढं प्रस्थाप्यते। येयं कथा श्रीपतिपण्डितमहिमाद्योतिनी अग्निस्तम्भनात्मिका जनश्रुतौ परम्परापतिता श्रूयते, सा नितरां सत्यतापूर्णेत्यत्रापरमप्येकं बलीयः प्रमाणमत्र प्रकाश्यते।

## शिलाशासनप्रमाणम्।

विजयवाडनगर एव श्रीपतिपण्डिताचार्य-निवास इति ज्ञायत एवात्रस्थैः। तत्रैव अनन्तपालराजसम्मुखं शिवधर्मशास्त्रप्रस्थापनं, अग्निस्तम्भनप्रकाशनं च श्रीपतिनानुष्ठितमित्यपि सुप्रसिद्धम्। किन्तु तद्वृत्तान्तस्थापनाय प्रत्यक्षसाधनमन्वेषयताऽनेन जनेन प्रयत्नविशेषेण विजयवाडनगरस्थिते श्रीमल्लेश्वरदेवालये पल्लकेतराजविलेखितं शिलाशासनं समुपलब्धम्, यत्र वा अग्निस्तम्भनं कृत्वा परविदुषः परं पराभवं प्रापय्य समुज्ज्वलं श्रीकरभाष्यमिदं प्रभाषितम्, तस्याधुनाऽपि शमीवेदिकेति ( जम्मिदोड्डि ) व्यवहारो दृश्यते, यद्वा भाष्यरचनास्थलं, यत्र वा शिलाशासनस्थितिः, यच्च शिलाशासनं तदेतत्त्रयमपि सप्रतिबिम्बं सपरिचयमत्र सम्मुद्र्यते।

## श्रीपतिपण्डिताराध्यमहिमान्वितं पल्लकेतराजशिलाशासनम्

शासनस्थानं—विजयवाड-मल्लेश्वरालयः । दैर्घ्यं—त्रिपादसार्धद्व्याङ्गुलम्। विस्तारः—सपञ्चाङ्गुलपादः।

# शासनपाठो यथाच्छायम् ।

१—ॐ वितस्ति विस्त्रु ( स्तृ ) तेनापि सर्वैंस्तुलिततेजसा पीतासे ( शे ) षा—
२—ब्धितोयेन कुम्भजेनाप्यगस्तिना । पूर्वं कृतजयेशान ना—
३—मापि तदनंत्त ( त ) रं आराध्य मल्लयुद्धेन फल्गुनेन कृता—
४—भिधः मल्लेश्वर इति ख्यात ( : ) सन्निधत्ते महेश्वरः श्रीमद्विज—
५—यवाटाख्यपुरे कृष्णाविभूषणे कलौ श्रीमच्छकाब्देऽब्धि—
६—शशिसायक संम्मि ( मि ) ते । राजा माधववर्माभूद्विख्यातो ध—
७—रणीतले ॥ तत ( : ) स्वपुत्रेण हते तिन्त्रिणीजीविनीसुते धर्म्मसं—
८—रक्षणार्थाय स्वपुत्रमवधीत्सराट् । ततो मल्लेश्वरः—
९—प्रीतः स्वर्णवृष्टिं ववर्ष च शिशुपुत्रकयोः प्राणं दत्तवाँ—
१०—स्तस्य कीर्तये ॥ तत [ : ] श्रीपण्डिताराध्यनाम्ना भक्तोत्तमेन च—
११—शिवभक्ता एव नूनं देवर्षिभ्योऽधिका—इति । चीनाम्बरेऽग्नि संस्ता (स्था) ।
१२—प्य शमीकोमलशाखया बद्धे मल्लेश्वरः प्रीतः प्रत्यक्षस्सम—
१३—जायत । ईदृग्विधं महादेवं भक्तवत्सलमव्ययं मल्लेश्व—
१४—रं समाराध्य रेजिरे पृथिवीभुजः ॥ स्वस्ति परमवंशोद्भव भार—
१५—द्वाजगोत्र खट्वाङ्गध्वज वृषभलाञ्छन काञ्चीपुरवरेश्वर कडु—
१६—वायुपरपोषण पल्लवकुलतिलकपादाम्बुजसेवित ( वक ? ) अं—
१७—नुव ( ? ) कामकुलाधिनायक अनेकबंद्धु ( धु ) जनाश्रय पतिहि—
१८—ताभरण पतिमेच्चुगंड्ड ( ड ) नोड्डुवडि साहसार्जुन संग्राम—
१९—रामसमरैकभीम डक्कु नूल शासनाधिप श्रीबेजवाडमल्ले—
२०—श्वरदेवदिव्य श्रीपादपद्माराधक परबलसूदक विप्रजना—
२१—श्रय श्रीवेंगिदेश चालुक्यनंककार परमण्डल चूरकार—
२२—पतिदेव गुरुद्विजपादभक्तु लुनु वररिपुजमुंड्डनु नैन
२३—श्रीमन्महामण्डलेश्वर पल्लकेतभूपालुंड्डु निखिललोक प्र—
२४—[ सिद्ध कार्वेटिम ] हीपालुवंशमुननवतरिंचि भुवनविज्...



(३) पल्लिकेतराज (श्रीपतिपण्डिताराध्यमहिमान्वित) शिलाशासनम्

(3) Inscription of Palliketa Raja ( Recording the Greatness of Shreepati Panditaradhya )



(४) व्यासकाश्यां व्यासगुरुः श्री **घण्टाकर्णशिवाचार्यः** ( लिङ्गधारी )

(4) **Ghantakarna Shivacharya** the Guru of Vyasa, at Vyasakashi.



(५) शीर्षलिङ्गधारी राजा **भारशिवः**

(5) **Bharashiva,** a King who bears the linga on his head.



(१) श्रीकरभाष्यरचनास्थलम् (शमीवाटी) [जम्मिदोड्डि]
(1) The Place where 'SHREEKARABHASHYAM' was composed
( Jammi Doddi or mimosa - yard )



(२) शिलाशासनमन्दिरम् (2) Stone Inscription chamber

## शासनसारः

"अत्रस्थमल्लेश्वरस्वामिने पूर्वमगस्त्येन जयेशाननाम कृतम्। तदनु अर्जुनेन कृतमल्लयुद्धत्वात् मल्लेश्वर इत्यभिधा समागता। ततो विजयवाटनगरे ५१४ तमे शालिवाहनशके (क्रि. श. ५९२) माधववर्मा राजा बभूव। यः खलु तिन्त्रिणीपल्लवोपजीविन्याः पुत्रस्य प्राणापहृते स्वपुत्रायापि मरणदण्डं विधाय आत्मनो न्यायपक्षपातित्वं प्रकटयामास। तदा मल्लेश्वरः धर्मस्वरूपममुं माधववर्माणं स्वदर्शनानुग्रहेण, मृतयोः प्राणप्रदानेन च धन्यतमं चकार। तदनन्तरं श्रीपतिपण्डिताराध्यो वीरमाहेश्वरः "देवर्षिभ्योऽपि शिवभक्ता एवाधिकाः इति" स्वप्रतिज्ञासिद्धये चीनाम्बरेऽग्निं संगृह्य शमीशाखायां बबन्ध। (तथापि न तच्चीनाम्बरं दग्धम्) ततो मल्लेश्वरः प्रत्यक्षोऽभवत्। एवंविधेनैव, मल्लेश्वरमाराध्य प्राचीनास्सर्वे नृपाला रेजिरे। तदनन्तरं भारद्वाजगोत्रः, काञ्चीपुरेश्वरस्य पल्लववंशीयराजस्य पादसेवकः, वेङ्गी चालुक्यसामन्तः, इक्कुनूल्लदेश (ग्राम ?) परिपालकः, बेजवाडमल्लेश्वरपादाराधकः कार्वेटिवंशोद्भवः, पल्लकेत भूपालः..........(श्री मल्लेश्वरस्य नित्यपूजाभोगार्थं परिहृतसर्वकरग्रहां भूमिं समर्पयामास ?)"।

अनेन शासनवृत्तान्तेन श्रीपतिपण्डितस्य अग्निस्तम्भनकथा विजयवाटिकायामेव संवृत्तेति पर्यवस्यते। श्रीपतिः पल्लकेतात्प्राचीन इत्यपि संगच्छते। अन्तिमभागस्य खण्डितत्वात् शासनलेखनकालो न ज्ञायते। तथापि लिपिशास्त्रमर्यादया, चालुक्यशासनानां ख्रि. श. १२ तमशताब्दानन्तरं अदर्शनाच्च, शासनमिदमपि द्वादशशताब्दीयमिति सम्भाव्यते। अतो मल्लिकार्जुनपण्डिताराध्य—पा० सोमनाथ—पल्लकेतराजादिभिः संस्मृतः श्रीपतिपण्डितः, तेभ्यः प्राचीन इति, पूर्वोदाहृतप्रमाणैः ख्रि. श. १०७० तमाब्दनिकटस्थ इति च निस्सन्देहं निर्धार्यते। श्रीकरभाष्याविर्भावकालोऽपि स एवेति सम्भवप्रमाणेनानुसन्धातव्यः।

## सन्देहनिरसनम्

बेंगलूर नगरनिवासिभिर्मध्वमतीयैः श्रीहयवदनरायैः सम्पादितं श्रीकरभाष्यं प्रकटितमप्यप्रकटितमिव अस्मदादिभिर्भाव्यते, रायमहाशया आंग्लभाषानिधयोऽपि देववाचि नितरामनधिगतसामर्थ्याद् भाष्यमखिलमपि अशुद्धिबहुलं मुद्रयामासुः। तत्पुस्तके एकत्र "मध्वद्वैतक्षपणकतार्किकादयः" इति वाक्यं दृश्यते, मध्वशब्दमिममवलम्ब्य मध्वाचार्यकालात् (११२०) अर्वाचीनत्वं

श्रीपतिपण्डितस्यारोपयितुं रायमहोदयेन परिश्रान्तमत्यन्तम् । अस्मत् परिशीलितेषु श्रीकरभाष्यलिखितपुस्तकत्रयेषु कुत्रापि मध्वशब्दादर्शनात्, उपरितनवाक्ये मध्वशब्दं विना "द्वैतक्षपणकतार्किकादयः" इति वाक्यस्य स्वाभाविकत्वाच्च केनाप्यर्वाचीनेन स्वमतीयेन वा मध्वशब्दः प्रक्षिप्तः स्यादित्येव सम्यक् प्रतिभाति । शंकररामानुजभाष्यवाक्यानि यथा श्रीकरभाष्ये यथामूलं दृश्यन्ते, न तथा मध्वभाष्यवाक्यमेकमपि लभ्यते । अत्र भाष्ये दृश्यमानेऽपि द्वैतखण्डने न तन्मध्वाचार्यमतमित्येव परिगण्यते, किन्तु प्राचीनद्वैतमित्येवावगन्तव्यम् । एवमेव रायमहोदयलिखितं सर्वमसाम्प्रदायिकं दत्तोत्तरप्रायमिव समाधेयम् । तदन्यत्र सत्वरं प्रपञ्चयिष्यते ।

## वीरशैवसिद्धान्तः

श्रीकरभाष्यपर्यालोचनया शक्तिविशिष्टाद्वैत-द्वैताद्वैत-विशिष्टाद्वैत-भेदाभेद-शिवाद्वैताद्युपनामा वीरशैवसिद्धान्तः, अनादिसंसिद्धो वेदवेदान्तप्रसिद्धो रेणुकदारुकैकोरामाद्याचार्यप्रस्थापितो नीलकण्ठ-परमशिवाराध्य-जोतिर्नाथ-शाम्भवानन्दादिभाष्यप्रकाशितो विराजत इति विबुधैरनेकैरविकलं विज्ञात एव । अत्र भाष्योपन्यस्ताः शिवागमाः, भाष्यादयः, शिवरहस्य-सिद्धान्तशिखामणि-कैवल्यप्रकाश-कैवल्यचन्द्रोदयादयो ग्रन्थाः श्रीकरभाष्यात्पूर्वमेव सुप्रसिद्धा आसन्निति निरातङ्कमवगन्तव्यम् । अन्यापि वीरशैवग्रन्थसम्पत्तिर्विपुला विजयते भारतीयासु भारतीषु । अखिलमेतदजानद्भिर्विपरीतज्ञानादसूयावशाद्वा बसवप्रवर्तितत्वमस्य यदनुमीयते, तत्सर्वमवद्यमप्रामाणिकमनार्यजुष्टञ्चेति दिक् ।

श्रीमतः श्रीकरभाष्याद् वीरशैवसिद्धान्तः सम्यग् बुद्ध्यत एव बुद्धिमद्भिः । विस्तरस्तु शिवागमसिद्धान्तशिखामण्यादौ विलोकनीयः ।

श्रीमदाचार्यचरणानुग्रहाद् यथाबुद्धिवैभवमेतद् भाष्यं संख्यावत्सु समर्प्यते । अस्य परिष्करण-संकलन-लेखनादिषु येषां ग्रन्थानां लेखानां च साहाय्यं समजनि, तदर्थं सधन्यवादं "मणौ वज्रसमुत्कीर्णे सूत्रस्येवाऽस्ति मे गतिः" इति कविकुलगुरूक्तिर्निवेद्यते । अन्यथा, का शक्तिर्मम वराकस्य गभीरभाष्यपरिशीलने !

इति निवेदयति
सुधीजनविधेयः,
चि० म० वीरभद्रशर्मा

शा. श. १८६३ वृषसहस्ये,
सिकन्दराबाद ।



भाष्यकारभगवत्पादाचार्य-श्रीपतिपंडिताराध्यकृतं
"अग्निस्तंभनम् "

श्रीकरभाष्य (चतुस्सूत्री)-

# विषयानुक्रमणिका



## १. जिज्ञासाधिकरणम्

## ४. समन्वयाधिकरणम्

श्रीजगद्गुरुपञ्चाचार्याः प्रसीदन्तु

## श्रीपतिपण्डितभगवत्पादाचार्यविरचितं

### ब्र ह्म मी मां सा सू त्र-

# श्रीकरभाष्यम्

ॐ नमो लिङ्गरूपाय जगज्जन्मादिहेतवे ।
निगमागमवेद्याय भक्तसिद्धिप्रदायिने ॥ १

यत् सन्दर्शनमात्रजर्जरितभक्तानीकपुर्यष्टकं
द्वैताद्वैतविशिष्टबौद्धमतमत्तेभेन्द्रकण्ठीरवः ।
शैवाद्वैतविवेकसारविलसत्सिध्दान्तपक्षप्रदं
शम्भोस्तच्चरणं भवाब्धितरणं मन्ये जगत्पोषणम् ॥ २

शिव त्वद्दासदासो यस्तद्दासोऽस्मीति या सुधीः ।
तां दत्त्वा कृपया पाहि जन्मजन्मान्तरेऽपि माम् ॥ ३

शिवस्य तत्त्वं शिव एव वेत्ति नन्दी च विष्णुर्नगजाकुमारः ।
शिवप्रसादाच्छिवतत्त्वमापुस्तेभ्यो नमः शाङ्करतत्त्वविद्भ्यः ॥ ४
सदाशिवं शक्तिधरं सुकेशं चण्डीश्वरं भृङ्गिरिटिं शिलादम् ।
कुम्भोद्भवं चिन्मयवामदेवं **श्रीरेवणासिद्धगुरुं** प्रपद्ये ॥ ५

श्रीमच्छिवाचारविचारदीक्षं स्वशिष्यसत्प्रीणनपूर्णपक्षम्
दुर्वारकामादिविदारदक्षं भजाम्यहं **रेवणकल्पवृक्षम्** ॥ ६

श्रीमत्सर्वकलासु कोविदतमः प्रालेयशैलात्मजा-
जानेः पूर्णकृपाविशेषनिचयप्रज्ञानधीर्यो ह्यभौ ।
**श्रीमद्रेवणदेशिकेन्द्रविभवं** लिङ्गावधानोज्वलं
**सिद्धार्यं मरुलप्रभुं** बुधनुतं तं मन्महे श्रेयसे ॥ ७

**एकोरामाख्यसिद्धं** प्रथितगुणगणागण्यपुण्योदयश्री-
सम्यक्संसेव्यमानं बुधनुतचरितं द्वापराचार्यवर्यम् ।
उद्यद्वेदान्तशास्त्रोभयगतविलसच्छैवसंस्थापनाढ्यम्
पूर्वाचार्यप्रसिद्धं शरणमहमिमं देशिकेन्द्रं प्रपद्ये ॥ ८

वातूलान्तिमकामिकादिशिवशास्त्रज्ञानषाण्मातुरो
मीमांसाद्वयतत्त्वबोधकवचस्संरम्भणाम्भोजजः ॥
तर्कव्याकरणादिशास्त्रनिचये साक्षाद्भवानीपति-
स्तस्मै श्रीगुरुमूर्तये शिवमताचार्याय तुभ्यं नमः ॥ ९

श्रीमद्दण्डशिखोपवीतविलसत्कन्थाजिनालङ्कृतः
काषायाम्बरकुण्डिकाप्रणवपात्रच्छत्रमौञ्जीधरः ।
वेदान्तोभयवाक्प्रबोधितलसच्छ्रीभस्मघुण्टीयुत-
**श्चैकोरामयतीन्द्रशेखरशिवाचार्यः** सदा पातु नः ॥ १०

श्रीवैयासिकसूत्रवर्णपदमुख्यार्थं शिवानुग्रहाद्
**भाष्यं श्रीकरनामकं** भवहरं दुर्वादिगर्वापहम् ।
सर्वानर्थविनाशकं बुधनुतं तत्त्वार्थबोधाकरं
**श्रीमच्छ्रीपतिपण्डितेन्द्रयतिना** व्यातन्यते साम्प्रतम् ॥ ११

अशेषोपनिषत्सारविशेषाद्वैतमण्डनम् ।
शिवज्ञानप्रदं सूत्रभाष्यं जयतु सर्वदा ॥ १२

वेदागमार्थतत्त्वज्ञशैवानां मोक्षकाङ्क्षिणाम् ।
वैदिकानां विशुद्धानामेतद्भाष्यं हि कल्पकं ॥ १३

श्रुत्येकदेशप्रामाण्यं द्वैताद्वैतमतादिषु ।
द्वैताद्वैतमते शुद्धे विशेषाद्वैतसंज्ञके ।
**वीरशैवैकसिद्धान्ते** सर्वश्रुतिसमन्वयः ॥ १४

विशब्देनोच्यते शम्भु - "हंसहंसे" - ति मन्त्रतः ।
शेषशब्देन शारीरो "यथाग्ने" -रिति मन्त्रतः ।
अद्वैतेन भवेद्योगो "यथा नद्य" इति श्रुतेः ॥ १५

**अगस्त्यमुनिचन्द्रेण कृतां वैयासिकीं** शुभाम् ।
**सूत्रवृत्तिं** समालोक्य कृतं भाष्यं शिवङ्करम् ॥ १६

## ॥ जिज्ञासाधिकरणम् ॥

अथोपनिषद्ब्रह्ममीमांसां दर्शयिष्यामः —

विषय-संशय-पूर्वपक्ष-सिद्धान्त-प्रयोजन-सङ्गतिरूपाधिकरणविशिष्टत्वे सति, सूत्रानुकूलश्रुत्यादिसहलिखितपदपरिष्कृतसूत्रपदाधिष्ठानत्वे सति, उपक्रमोपसंहारादि-षड्विधतात्पर्यलिङ्गप्रकाशकत्वं भाष्यत्वम् ।

गर्भाष्टमप्रयुक्तोपनयनसंस्कारसिद्धश्रुत्यर्थोपदेष्टृदेशिकमुखोदितनियमनियत-निगमार्थज्ञानावच्छिन्नश्रोत्रियस्यैव स्थूलारुन्धतीन्यायेन धर्मजिज्ञासादर्शने स्वभाव-नियमनियतप्रयोजकतया यत्पूर्वभावित्वं विधीयते, यत्पुरुषव्यापारतन्त्राभ्युदयफलं, यदसन्दिग्धमप्रयोजनं घटवन्न तत्प्रेक्षाविषयः, अप्रयोजकत्वात् करटदन्तवत् ।

विषयस्सोपाधिको निरुपाधिको वा ? प्रसिद्धोऽप्रसिद्धो वा ? युष्मदस्म-त्प्रत्ययविषयाराध्याराधकयोः शिवजीवयोर्भेदो वा ? न वा ? भेदे **"यथा नद्यः"** (मुं. ३-२-८) इत्यादिश्रुतिशतविरोधापत्तिः, अभेदे **"द्वा सुपर्णा"** (मुं. ३-१-१) इत्यादिश्रुतिवैयर्थ्यप्रसङ्गः । मुख्यत्वेन प्रामाण्यं यावच्छ्रुतीनां यत्किञ्चिच्छ्रुतीनां वा ? यन्नियमनियतपूर्ववृत्तधर्मविषिष्टो ह्यधिकारी ? यदवच्छिन्नविशेषार्थित्वादयो धर्माः ? यदनन्तरमेतदारम्भः ? इत्याद्यनेकसंशयविशिष्टमुमुक्षुस्वान्तचिन्ताशूकविध्वंसनार्थं परमकारुणिकेन सर्वशास्त्रविज्ञानशिखामणिना महापाशुपतदीक्षाविशिष्टेन पाराशर्येण पुनरावृत्तिरहितचरमशाश्वतपुरुषार्थफलप्रदर्शकमिदं सूत्रं निरूपितं ।

## अथातो ब्रह्मजिज्ञासा ॥ १ ॥

इति । अत्र जिज्ञासापदेन संशयप्रयोजने दर्शयति. संशयश्च सूत्रप्रतिपादितं ब्रह्म अस्ति वा ? न वा ? इति ।

**"ब्रह्म वा इदमग्र आसीत्"** (बृ. १–४–१०) **असद्वा इदमग्र आसीत्"** (तै. आ. ७) इत्यादिभिः सत्त्वासत्त्वप्रतिपादनात् ।

तत्र पूर्वपक्षः— ब्रह्म नास्ति । घटादिवच्चाक्षुषादिविषयत्वायोगात्, जीवानां जन्मान्तरज्ञानादर्शनात्, परलोकगतपुरुषपुनरागत्यनुभवाभावात्, **"भस्मीभूतस्य**

**देहस्य पुनरागमनं कुतः। तस्मात्सर्वप्रयत्नेन ऋणं कृत्वा घृतं पिबेत्॥"** इति शास्त्रदर्शनाच्च। सुधाहरिद्राचूर्णवैशिष्ट्येनारुणरूपोत्पत्तिवत् गोमयादिषु कीटोत्पत्तिवच्च पृथिव्यादिभूतवैशिष्ट्येन चेतनाचेतनोत्पत्तिः, तद्वियोगो नाशः, न तस्माज्जीवः शरीरभिन्नः।

किञ्च– मतान्तरवैदिकवादे शरीरभिन्नजीवसत्त्वपक्षेऽपि तज्जीवनियामकेश्वरो नास्ति. तथाहि—

विधिमन्त्रार्थवादभेदेन श्रुतिस्त्रिविधा। तत्र– **"ज्योतिष्टोमेन स्वर्गकामो यजेत"** इति विधिवादो मुख्यः; मन्त्रवादो ह्यनुष्ठेयार्थप्रकाशनविषयः; अर्थवादः स्तुतिविषयः। जीवानां स्वकर्मानुसारेण सुखदुःखादिकमपूर्वमेव दास्यति. तस्मान्न ब्रह्मजिज्ञासा सम्भवति।

किञ्च– उपनिषच्छास्त्रमनारम्भणीयं. संशयप्रयोजनसद्भावाभावात्. सन्दिग्धं हि विचारविषयः; **"सन्दिग्धे न्यायः प्रवर्तते"** इति न्यायात्। संशयस्तु परशिवात्मनि? शारीरात्मनि वा? नाद्यः- **"सत्यं ज्ञानमनन्तं ब्रह्म"** (तै. आनंद. १) **"एको हि रुद्रो न द्वितीयाय तस्थुः"** (श्वे. ३-२) **"रुद्रमेकत्वमाहुः शाश्वतं वै पुराणं"** (अथर्वशिरः ५) इत्यादिश्रुतिशतेन परशिवात्मस्वरूपस्य निश्चितत्वात्। अहम्प्रत्ययेन शारीरात्मद्योतनान्न द्वितीयः।

किञ्च— तद्विचारस्य तद्विषयज्ञानं हि फलं? ज्ञेयपरिच्छेदो हि ज्ञानं? तदा अनेन ब्रह्म परिच्छेद्यं? न वा? परिच्छेदे हि अपरिच्छेद्यत्वविधायकश्रुतिशतविरोधः, घटवदनित्यत्वप्रसङ्गश्च। अपरिच्छेदे यथार्थसाक्षात्काराभावेनाप्रसिद्धिप्रसङ्गः। न च प्रयोजनं- **"अजामेकां लोहितशुक्लकृष्णां"** (श्वे. ४-५) **"ज्ञाज्ञौ द्वावजावीशनीशौ"** (श्वे. १-९) इत्यादिभिः स्वाभाविकशारीरप्रकृत्योरविनाशित्वावगमेन ब्रह्मज्ञानेनापि मुक्तेरसम्भवात्।

ननु— **"अयमात्मा ब्रह्म"** (बृ. २-५-१९) **"तत्त्वमसि"** (छां ६-८-७) इत्यादिभिर्जीवब्रह्मणोरेकत्वप्रतिपादनात्, अहम्प्रत्ययेन भेदप्रतिपादनाच्च संशयः किं न स्यात्? इति चेन्न — अबाधिताहम्प्रत्ययविरोधेनैक्यश्रुतीनामुपचरितार्थत्वात्, न च परमात्मविषयेऽप्यहम्प्रत्ययस्य दुर्बलत्वं, स्वयम्प्रकाशेऽपि ब्रह्म-

ष्यनाद्यविद्यावशादहम्प्रत्ययेन **"मनुष्योऽहं"** इत्याद्यध्यासानुभवदर्शनात्. **"नहि दृष्टेऽनुपपन्नं नाम"** इति न्यायात् अध्यासानुपपत्तावनिर्मोक्षप्रसङ्गः ।

किञ्च—तमःप्रकाशवद्भेदाभेदयोः परस्परविरुद्धस्वभावत्वादेकपक्षावलम्बनं युक्तं. अतः—**"यतो वाचो निवर्तन्ते"** (तै. आनं. ९) इत्यादिना ब्रह्मणोऽविषयत्वदर्शनाच्च वेदान्तशास्त्रमनारम्भणीयम्. इति प्राप्ते ब्रूमः—

सर्वोपनिषत्सिद्धद्वैताद्वैतविधायकब्रह्ममीमांसाशास्त्रारम्भो युक्तः. ब्रह्मसत्त्वे प्रत्यक्षानुमानागमप्रमाणदर्शनात्. तथाहि—**"एको हि रुद्रो न द्वितीयाय तस्थुः"** (श्वे ३-२) इत्यादिबह्वागमदर्शनादागमप्रमाणम्.

सूर्यचन्द्रर्तुसमुद्रकालादीनामीश्वरापेक्षावशात् स्वधर्मप्रवृत्तिद्योतनात्, लोके धनधान्यविद्यादिपूर्णसहायसम्पन्नानामपि स्वाभीष्टसर्वकार्यसिद्ध्यदर्शनात्, तत्सहायरहितानामपि कदाचित्काले दुर्घटकार्यसिद्धेर्दृष्टत्वाच्च सर्वज्ञेश्वरसत्त्वे जीवानां जन्मसत्त्वे चेदमेव प्रत्यक्षं प्रमाणम् ।

लोके रथगोपुरप्रासादप्राकारादिकार्यजातस्य चेतनकर्त्रपेक्षादर्शनात्, तद्वद्वियदादिजडाजडप्रपञ्चस्यापि कर्ता परमेश्वरोऽस्तीति विवेकिभिरनुमीयते ।

"सुधानिशाचूर्णसंयोगे लोहितरूपप्राप्तिवत् पृथिव्यादिभूतचतुष्टयसंयोगेनैव चेतनाचेतनसृष्टिः स्वतो भविष्यति" इति यदुक्तं तदयुक्तं. केवलपृथिव्यादिभूतसंयोगेन पशुपक्षिमृगाद्युत्पत्त्यदर्शनात्, एकशरीरावच्छेदेन पशुमनुष्यादिधर्मविशिष्टभूतोत्पत्तिश्च किं न स्यात्? गोमयादिषु गुप्तजीवस्य ईश्वरेण स्थापितत्वात्, सर्वसहायसम्पन्नस्य महाराजस्यापि अनपेक्षिताधिव्याधिजरामरणदरिद्रत्वादिप्राप्तिदर्शनात्, जीवानां जन्मान्तरकृतपुण्यापुण्यकर्मानुसारेण प्रभुवत् फलप्रदायकेश्वरोऽस्तीति निश्चीयते ।

जडस्यापूर्वस्य जीवकृतपुण्यापुण्यकर्मानुकूलफलदातृत्वायोगात्, जारचोरादिकर्मणामेव तत्तत्कर्मानुसारेण फलदातृत्वादर्शनाच्च धर्ममीमांसावादोऽप्यविचारितरमणीयः. एतेन कपिलकणादादीनां जडजगत्कारणवादोऽपि निरस्तः ।

**"असद्वा इदमग्र आसीत्"** (तै. आनं. ७)इति श्रुतावसच्छब्देन सूक्ष्मत्वमुपदिष्टम्. नो चेत् **"ततो वै सदजायत"** (तै. आनं. ७) इत्युत्तरवाक्य-

विरोधो दुर्निवारः । अत्रासच्छब्देन खपुष्पशशशृङ्गादिवच्छून्यत्वाङ्गीकारे वन्ध्यापुत्रेण सत्पुरुषोत्पत्तिः किं न स्यात् ? अतः पूर्वोक्तमेव युक्तं **"असदिति चेन्न प्रतिषेधमात्रत्वात्"** (ब्रह्मसू. २-१-७) इति सूत्रे **बादरायणेनै**वायमर्थो बहुधा प्रपञ्चितः ।

किञ्च—संशयप्रयोजनसद्भावादपि शास्त्रारम्भो युक्तः, वेदागमोभयवेदान्तप्रतिपादितस्वाभाविकानन्तशक्तिविशिष्टजगदुभयकारणपशुपाशनियामकसकलनिष्कलस्थूलसूक्ष्मचिदचित्प्रकाशकसत्यज्ञानानन्तकल्याणगुणविभवाश्रयत्वं ब्रह्मत्वम्। अनादिस्वाभाविकमायापाशबद्धघोरापारनिस्सारसंसारव्यापारतापत्रयानलदन्दह्यमाननानाशरीरप्रवेशनिर्गमनवर्णाश्रमाभिमानविशिष्टकामक्रोधाद्यनुस्यूतसुखदुःखाश्रयत्वं जीवत्वम् । परस्परविरुद्धस्वभावयोरजन्ययोरविनाशिस्वभावयोरेतयोः **"तत्त्वमसि"** (छां. ६-८-७) **"अहं ब्रह्मास्मि"** (बृ. १-४-१०) **"ब्रह्म वेद ब्रह्मैव भवति"** (मुं ३-२-९) इत्यादिभिरभेदव्यपदेशात् सन्देहः ।

ब्रह्मणस्सविशेषत्वे परिच्छेद्यत्वमिति यदुक्तं तदयुक्तं. घटवत्परिच्छेद्यत्वाभावेऽपि **" नेति नेति "** (बृ. २-३-६) **" अस्थूलमनण्वह्रस्वमदीर्घं "** (बृ. ३-८-८) इत्यादिव्यावर्तकलक्षणेन परिच्छेदयोग्यत्वात्. लक्ष्यविषयत्वाल्लक्षणपरिच्छेदस्य तदलक्षणसजातीयविजातीयस्थूलसूक्ष्मप्रपञ्चव्यावृत्ततया ब्रह्म वेदान्तवाक्यैर्निरूप्यते· तस्मात्तद्विचारो युक्तः ।

**"ब्रह्मविदाप्नोति परम्"** (तै. आनं. १) **"ज्ञात्वा शिवं शान्तिमत्यन्तमेति"** (श्वे. ४-१४) **"ईशं तं ज्ञात्वा अमृता भवन्ति"** (श्वे. ३-७) **"ज्ञाननिर्मथनाभ्यासात्पाशं दहति पण्डितः"** (कैवल्य.१-१-१) **"शिव एको ध्येयः शिवङ्करस्सर्वमन्यत्परित्यज्य"** (अथर्वशिखा. ३) **"क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः। तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः"** (श्वे.१-१०) **तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशं"** (महाना. अनु. १०) **"ज्ञात्वा देवं मुच्यते सर्वपाशैः"** (श्वे. १-८) इत्यादिष्वद्वितीयषट्स्थलपरशिवब्रह्मज्ञानेन स्वाभाविकमलत्रयात्मकमायापाशदुःखनिवृत्तिपूर्वकपरमपुरुषार्थपरशिवतत्त्वप्राप्तिदर्शनात् प्रयोजनम्।

भ्रमरकीटलोहरसादिषु स्वभाविकभेदनिवृत्तिदर्शनात् तत्त्वमस्याद्यभेदश्रुतिषु मुख्यार्थबाधाभावान्न गौणार्थलक्षणार्थस्वीकारः। **"यथा नद्यः स्यन्दमानास्समुद्रे**

**अस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुष-मुपैति दिव्यं**" (मुं. ३-२-८) इत्यादिश्रुतावसन्दिग्धतया प्राप्यप्रापकत्वोपदेशात्. न चैतच्छ्रुतेरुपचरितार्थत्वम्. उपक्रमादिषड्विधतात्पर्यलिङ्गसहकृतानेकश्रुतीनामुपचरितार्थत्वस्य वक्तुमयुक्तत्वात्. मुख्यार्थपरित्यागे ईक्षत्यधिकरणविरोधः ।

न चाध्यासानुपपत्तावनिर्मोक्षप्रसङ्गः. तद्विधायकप्रात्यक्षिकश्रुत्यदर्शनात्. "**अहमज्ञः**" इत्यनुभवस्य शरीरेन्द्रियादिविशिष्टमायापाशबद्धजीवलक्षणत्वात्. निर्विशेषचिन्मात्रब्रह्मणस्तद्भिन्नमायोपाधित्वं कथमुपपद्यते ? "**यस्सर्वज्ञस्सर्ववित्**" (मुं. १-१-९) "**प्रज्ञानं ब्रह्म**" इत्यादिश्रुतिषु तस्य सर्वज्ञत्वप्रज्ञानत्वादिधर्मोपदेशान्न जीववदज्ञत्वादिधर्मप्रसङ्गः. तस्याऽविद्याङ्गीकारे ब्रह्मत्वभङ्गप्रसङ्गः. तस्याविद्यासत्त्वे अविद्यैव मानमिति चेत् अन्योन्याश्रयदोषः ।

किञ्च—"**अप्राणो ह्यमनाश्शुभ्रः**" (मुं. २-१-२) इति श्रुतौ तस्य मनःप्राणसम्बन्धाभावदर्शनात्तद्विहीनस्य भ्रमः कथमुपपद्यते ? किञ्च जीववत्तस्याज्ञत्वस्वीकारे तदज्ञाननिवर्तकब्रह्मान्तरमवश्यमङ्गीकर्तव्यं. तथा चेदनवस्थाप्रसङ्गः. ब्रह्मणः स्वस्वरूपतिरोधायकमज्ञानमस्ति चेत्, तस्य ततोऽधिकत्वेन मिथ्यात्वं नोपपद्यते. "**ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्**" (कैवल्य. १-७) "**तमेव विदित्वाऽतिमृत्युमेति**" (श्वे. ३-८) **ब्रह्मविदाप्नोति परं**" (तै. आनं १) इत्यादिश्रुतिषु तस्य तमःपरत्वं, तदज्ञानस्य जीवानां मुक्तिहेतुत्वं चोपदिश्यत इति न तद्युक्तम् ।

शुक्तिरजतवत्तस्य जीवत्वं भ्रान्तिमात्रमिति चेन्न, सर्वत्र पदार्थचतुष्टयसद्भावे भ्रान्तिः सम्भवति. अत्र ब्रह्मेतरवस्त्वभावान्न भ्रान्त्युपपत्तिः, वस्त्वन्तराङ्गीकारे ह्यद्वैतहानिः. अनङ्गीकारे भ्रान्त्यनुपपत्तिः. न स्वप्नवत् प्रपञ्चस्य मिथ्यात्वं, अर्थसिद्धिक्रियासिद्धिदर्शनात्. विधिनिषेधरूपशास्त्रार्थाचार्योपदेशादीनां कर्तव्यत्वायोगेन बुद्धमतप्रवेशापत्तेश्च ।

"**नाभाव उपलब्धेः**" (ब्रह्मसू. २-२-२७) "**वैधर्म्याच्च न स्वप्नादिवत्**" (ब्रह्मसू. २-२-२८) इति द्वितीयेऽध्याये स्वप्नेन्द्रजालवत् प्रपञ्चमिथ्यात्ववादो बहुधा निरस्तः ।

**असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरं ।**
**अपरस्परसम्भूतं किमन्यत्कामहेतुकम् ॥८॥**
**एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।**
**प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ ९ ॥**

(गीता. अ. १६.)

इत्यादिना **कृष्णगीतायां** चैतन्मतं बहुधा निरस्तं ।

किञ्च—**"लक्षणप्रमाणाधीना हि वस्तुसिद्धिः"** इति न्यायेन निर्विशेष-ब्रह्मसत्त्वे किं मानं ? श्रुतिरस्तिचेत्, तस्या जगदन्तःपातित्वेन मिथ्यात्वात् तत्प्रतिपाद्यस्य ब्रह्मणोऽपि मिथ्यात्वं स्यात्; वेदसत्यत्वाङ्गीकारे अद्वैतहानिः, असत्यत्वे तु ब्रह्मसत्त्वे सत्प्रमाणान्तराभावात् वन्ध्यापुत्रादेरिव ब्रह्मणोऽपि मिथ्यात्वं स्यात्।

किञ्च—अध्यासानङ्गीकारे मुक्तेर्बाधकाभावः, तदङ्गीकारे स्वाभाविकत्वेन सर्वश्रुतीनां समन्वयायोगः. न चाध्यासे अविद्यैव मानं, स्वप्रकाशत्वभङ्गप्रसङ्गात्. नच अविद्याविशिष्टं चैतन्यमिति वाच्यं, अन्योन्याश्रयप्रसङ्गात्. **"जीवोऽहं मनुष्योऽहं"** इत्यादिभ्रमप्रत्ययस्यापि परमेश्वराधीनत्वात्, **"एष एव साधु कर्म कारयति".** (कौषी. २-९) इत्यादिषु परमेश्वरस्यैव सर्वकर्मकारयितृत्वोपदेशात्,

**ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन! तिष्ठति।**
**भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया॥**

इति कृष्णगीतायां (गीता. १८-६१) तथैवोपदेशात्।

**"वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं"** (छां: ६-१-४) इति श्रुतावपवाददर्शनादध्यासो ग्राह्य इति चेन्न, वाचारम्भणादिश्रुतीनां शिवोपादानत्वात् प्रपञ्चस्य तत्तादात्म्यबोधकत्वं विधीयते; न मिथ्यात्वबोधकत्वं।

**वाचारम्भणवाक्यानि तदनन्यत्वबोधनात्।**
**न मिथ्यात्वाय कल्पन्ते जगतश्शिवरूपतः ॥**

इति स्मृतेश्च। अत एव भगवता **व्यासेन** जगन्मिथ्यात्ववारणाय **"तदनन्यत्वमारम्भणशब्दादिभ्यः"** (ब्र. सू. २-१-१४) इति सूत्रे तज्जन्यप्रपञ्चस्य तत्स्वरूपत्वं निर्दिष्टं।

अध्यारोपस्तु तस्य ? तदन्यस्य वा ? नाद्य :—ब्रह्मणश्शरीरेन्द्रियादिशून्यत्वात्। न द्वितीयः —"**सदेव सोम्येदमग्र आसीत्**" (छां. ६-२-१) इत्यादौ सृष्टेः प्राक् द्वितीयवस्तुनिषेधदर्शनात्; तदन्यस्वीकारे शुद्धाद्वैतभङ्गप्रसङ्गाच्च। तमःप्रकाशवद्विरोधाभावाद्भेदाभेदो युक्तः. द्वैताद्वैतात्मकशरीरशारीरपरमात्मनां तादात्म्यभावे व्यवहारायोगादद्वैतिनामध्यासासम्भवात्।

न च ब्रह्मज्ञानपर्यन्तमेव प्रपञ्चस्य सत्यत्वं, तदूर्ध्वमपि क्षुत्पिपासादिद्वैतकर्मद्योतनात्. न चैकपक्षो युक्तः — अभेदस्वीकारे "**द्वा सुपर्णा**" (मु. ३-१-१) इत्यादिभेदश्रुतिविरोधः; भेदस्वीकारे "**तत्त्वमसि**" (छां. ६-८-७) इत्याद्यभेदश्रुतिविरोधः. द्वैताद्वैतस्यैव स्वाभाविकत्वेन सर्वश्रुतिसमन्वयात्, श्रुतिसङ्कोचे मानाभावात्, यत्किञ्चिच्छ्रुतिप्रामाण्याङ्गीकारे बौद्धादिवद्वेदबाह्यत्वप्रसङ्गात्, "**यतो वा**" (तै. भृ. १) इत्यदिना द्वैताद्वैतात्मकप्रपञ्चब्रह्मणोः कार्यकारणत्वदर्शनात्, "**प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः**" (ब्रह्मसू. १-४-२०) इत्यादिसूत्रत्रयेण भेदादिमतत्रयस्यैवात्र विवक्षितत्वात्, "**उभयव्यपदेशात्त्वहिकुंडलवत्**" (ब्रह्मसू. ३-२-२६) इति सूत्रेण भेदाभेदस्यैवाविरोधित्वेन निर्दिष्टत्वात्, "**भेदाभेदस्तथाऽभेदो भेद एते मतास्त्रयः**" इति सूतसंहितायां, "**ध्रुवं कश्चिद्ब्रूते सकलमपरस्त्वध्रुवमिदं परो ध्रौव्याध्रौव्ये**" इति महिम्नस्स्तवादिषु च भेदादिमतत्रयस्यैव निर्देशाच्च. "**यतो वाचो निवर्तन्ते**" (तै. आ. ९-१) इत्यादिश्रुतीनां गुरुकटाक्षरहितप्राकृतजीवपरत्वं; नो चेत्—"**आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति**" (तै आ. ९-१) इत्युत्तरवाक्यविरोधः, तन्माहात्म्यज्ञापनपरत्वं वा, अन्यार्थत्वे "**ब्रह्मविदाप्नोति परं**" (तै. आ. १) "**ब्रह्म वेद ब्रह्मैव भवति**" (मुं. ३-२-९) इत्यादिब्रह्मानुभवविधायकबहुश्रुतिविरोधश्च।

किञ्च—"**नावेदविन्मनुते तं बृहन्तं**" (तै. ब्रा. ३-१२-९-७) "**नैषा तर्केण मतिरापनेया**" (कठ १-२-९) "**तं त्वौपनिषदं पुरुषं पृच्छामि**" (बृ. ३-९-२६) "**शास्त्रयोनित्वात्**" (ब्रह्मसू. १-१-३) इत्यादिश्रुतिसूत्रेषु ब्रह्मणो मानान्तरनिषेधदर्शनाच्च, सर्वश्रुतिसमन्वितभेदाभेदब्रह्ममीमांसारम्भो युक्तः।

अत्राथशब्देनानन्तर्यार्थो विवक्षितः। "**अथ शब्दानुशासनं**" "**अथ योगानुशासनं**" (योगसू. १-१) "**अथैष ज्योतिरथैष विश्वज्योतिः**" इत्यादाविवाथशब्दस्य नाधिकारार्थत्वं; जिज्ञासाया अनधिकार्यत्वात्. ननु जिज्ञासापदस्य विचार-

लक्षकत्वात् विचारस्य च प्रत्यधिकरणं वर्तिष्यमाणत्वेन अधिकृतत्वसम्भव इति चेन्न— आनन्तर्याभिधानमुखेन विध्यपेक्षिताधिकारिविशेषसमर्पकत्वेन साधकत्वं विधीयते ; तदनपेक्षिताधिकारार्थकत्वस्यायोगात्. **"अथ शब्दानुशासनं"** इत्यादेर्विधिमूलकत्वाभावान्नाधिकार्यपेक्षितृत्वं । मङ्गलस्य जिज्ञासायामन्वयासम्भवान्न मङ्गलार्थः, पूर्वाचार्यानुचारस्थापनार्थं वर्णध्वनिमात्रेण मङ्गलार्थकत्वं ।

**ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।**
**कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥**

इति स्मृतेः । **"अथातश्शेषलक्षणं"** (पूर्वमी. ३-१-१) इतिवन्न पक्षान्तरं ; पूर्वमेकस्याप्रकृतत्वात् ।

अदीक्षितस्य मलत्रयविध्वंसाभावान्न साधनचतुष्टयानन्तर्यं ।

नच अनियतभोजनगमनादिवत् यत्किञ्चित्पूर्ववृत्तत्वं ; नियमविधिदर्शनात्. यत्पूर्वभावित्वं नियमनियतप्रयोजकतया मुमुक्षूणां मलत्रयविध्वंसने विधीयते, तत्पूर्वकत्वं ब्रह्मविचारशास्त्रस्येति निर्णीयते । अस्य विषयः श्रूयते तैत्तीरीयशाखायां— ब्रह्ममेधाकामस्य तत्प्राप्तिसाधनं किमित्याकाङ्क्षायामाह— **"यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्योऽध्यमृतात् सम्बभूव । स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देवधारणो भूयासं । शरीरं मे विचर्षणं । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवं । ब्रह्मणः कोशोऽसि मेधया पिहितः । श्रुतं मे गोपाय"** इति (तै. शिक्षा ४.)

अस्यार्थः—यः– शिवः, छन्दसामृषभः - सर्वविद्याप्रभुः, **"ईशानस्सर्वविद्यानां"** (महाना. ४७-अनु.) इति श्रुतेः. विश्वरूपः—प्रपञ्चमयः, **"सर्वो ह्येष रुद्रः"** (महाना. अनु.-१६) इति श्रुतेः. यः- छन्दोभ्यः-आम्नायेभ्यः, अमृतात् अधिसम्बभूव—वेदोपनिषदागमादीनाममृतरूपत्वात् तत्प्रतिपाद्यः, वचनव्यत्ययश्छान्दसः. स इन्द्रः —परमैश्वर्यशाली शिवः, मा—मां, मेधया—प्रज्ञया, स्पृणोतु—प्रीणयतु, बलयतु वा. तद्विज्ञानार्थं प्रज्ञाबलं हि प्रार्थ्यते । अमृतस्य—मोक्षाय, देवधारणः —देवस्य लिङ्गरूपशिवस्य धारणं यस्य सोऽहं देवधारणः, भूयासं—भवेयं, चिच्छक्तिप्रकटीकृतपरशिवेष्टलिङ्गधारी भूयासमित्यर्थः, अतः मे शरीरं विचर्षणं किल्बिषरहितं भूयादित्यर्थः । मे जिह्वा, मधुमत्तमा—मधुमती, अतिशयेन

मधुरसम्भाषिणी भूयात् , कर्णाभ्यां—श्रोत्राभ्यां, भूरि विश्रुवं—शिवज्ञानयोग्यकार्य-कारणसङ्घातरूपो भूयासमित्यर्थः। तन्मेधा च तदर्थमेव प्रार्थ्यते। ब्रह्मणः—शिवस्य, कोशोऽसि—असेरिवोपलब्ध्यधिष्ठानमित्यर्थः। मेधया—लौकिकप्रज्ञया, पिहितः—आच्छादितः, सामान्यप्रज्ञया अविदितसत्त्व इत्यर्थः, **"नावेद विन्मनुते तं बृहन्तं"** (तै. ब्रा. ३-१२-९-७) **"नैषा तर्केण मतिरापनेया"** (कठ. १-२-९) इति श्रुतेः, श्रुतं – श्रवणपूर्वकं भक्तिज्ञानादिकं, मे – मम, गोपाय– रक्ष; तत्प्राप्त्यविस्मरणादिकं कुर्विति भावः।

देवधारणो भूयासमित्यत्र बाह्यलिङ्गधारणं? अन्तर्लिङ्गधारणं? प्रणवधारणं वा? इति सन्देहः. **"तं दैवतानां परमं च दैवतं"** (श्वेता. ६-७) **"तस्माद्देव-शिवः स्मृतः" "देव्या युतं देवतनुं युवानं"** इत्यादौ देवशब्दस्य परशिवपर-त्वेन बहुशः प्रयोगदर्शनात्,अन्यदेवधारणकर्तव्यताविधायकशास्त्रादर्शनादाचाराभावाच्च। धारणशब्दस्य कर्तरिल्युडन्तत्वेन देवं धरतीत्यर्थे सिध्दे सति, अमृतस्य—मुक्त्यर्थं देवधारणो भूयासं, तस्मात् मां मेधया स्पृणोतु—संयोजयतु, इत्यादिना लिङ्गधारण-प्रतीतेः, भूयासमित्यत्र लिङोऽपि सत्त्वेन विध्यर्थोपपत्तेश्च ब्रह्ममेधाकामस्य लिङ्गधार-णावश्यकत्वं प्रतीयते।

किञ्च **"यश्छन्दसामृषभो विश्वरूपः"** इत्यादिना प्रणवपरत्वमपि सूचितं. **"यो वेदादौ स्वरः प्रोक्तः"** (महाना. अनु. १०) इत्यनेन छन्दोवृषभत्वं, **"ॐ तत्सर्वं"** (महाना. अनु. २८) इत्यादिना विश्वरूपत्वादिकं, **"ब्रह्मणः कोशोऽसि"** इत्यत्र परब्रह्माधिष्ठानत्वं च तस्यैवोपपन्नमिति अन्तर्धारणविधायकत्व-परत्वमपि सूचितं. यमाद्यष्टाङ्गयोगेषु वैदिकानामन्तर्धारणस्य विधेयत्वाच्च।

पूर्वपक्षस्तु—विश्वरूप इति ब्रह्मलिङ्गस्य निरुपपदब्रह्मपदस्य च परिच्छिन्न-लिङ्गपरत्वायोगात् , देवधारण इत्यत्र "देव" इति पदच्छेदाभावे गोपायेत्यन्वयस्या-सम्भवात् , भूयासमित्यत्र आशीर्लिङ्त्वेन विध्यर्थकत्वासम्भवात् , **"लिङ्गिनं चक्रिणं दृष्ट्वा"** इत्यादिना बाह्यलिङ्गधारणस्य निषिद्धत्वात् , **"लिङ्गमध्ये जगत्सर्वं" "प्राणेष्वन्तर्मनसो लिङ्गमाहुः" "ज्योतिर्लिङ्गं भ्रुवोर्मध्ये नित्यं ध्यायेत्सदा यतिः" "लिङ्गं ब्रह्मैव केवलं"** इत्यादिषु शिवस्य परब्रह्मणः लिङ्गरूपत्वोपदेशात् , तैत्तिरीयकैवल्यादिषु **"दहरं विपाप्मं परवेश्मभूतं"** (महाना. अनु. १०) **"हृत्पुण्डरीकं विरजं विशुद्धम्"** (कैव. १-६) इत्यादिनाऽन्तर्लिङ्गधारणस्यैव निर्दि-

ष्टत्वात्, शाखान्तरेष्वपि बाह्यलिङ्गधारणाऽदर्शनात् न बाह्यलिङ्गधारणस्य वैदिकत्वं सिध्यति।

ननु—**"विश्वाधिको रुद्रो महर्षिः"** (महाना. अनु. १०) **"त्वं देवानां ब्राह्मणानामधिपतिः क्षत्रियाणामधिपतिर्विष्णुः"** इत्यादिश्रुतिष्वद्वितीयस्य शिवस्य विश्वाधिकत्व-ब्राह्मणत्व-ब्राह्मणाधिपतित्वदर्शनात्, तत्प्रणीतकामिकादिवातूलान्तागमविरुद्धमन्वादिस्मृतिपुराणानां मानत्वाभावात्, यजुर्वेदसंहितायां त्रिपुरसंहारे—**"तेषामसुराणां तिस्रः पुर आसन्"** इत्यारभ्य **"सोऽब्रवीद्वरं वृणा अहमेव पशूनामधिपतिरसानि"** (तै. सं ६-२-३) इत्यादिना ब्रह्मविष्ण्वादिदेवेषु पशुत्वस्य, शिवे पशुपतित्वस्य तेषु शिवलिङ्गभस्मरुद्राक्षादिशैवलाञ्छनधारणस्य च श्रूयमाणत्वात् लोके आराध्याराधकप्रभुभृत्ययोस्तथा दर्शनात्, **"सर्वलिङ्गं स्थापयति"** इत्यादिभिश्च बाह्यलिङ्गधारणस्य विधेयत्वदर्शनात्, रागद्वेषादिपाशबद्धानां पशुभावमापन्नानां मुमुक्षूणां भक्तानामस्माकं पतिलाञ्छनात्मकपरशिवेष्टलिङ्गधारणं किमु वक्तव्यं? इति चेन्न.

शिवोक्तकामिकाद्यागमानां यावज्जीवलिङ्गधारणविधायकत्वात्, **"न हि कर्मणि कर्मान्तरारम्भः"** इति न्ययेन नित्यौपासनादिपौण्डरीकान्तश्रौतस्मार्तकर्मणां निरवकाशत्वात्, दीक्षितस्य सूतकादिनिषेधदर्शनेन सापिण्ड्याद्युत्तरकर्मणां वैयर्थ्यप्रसङ्गात्, शैवदीक्षानन्तरं जीवत्वप्रेतत्वाभावेन स्वजात्याश्रमधर्माणां प्रयोजनाभावात्, **"न कुर्यान्निष्फलं कर्म"** इति न्यायेन विधिनिषेधनिरवकाशत्वेन वेदबाह्यमतप्रवेशापातात्, वसिष्ठादिब्रह्मनिष्ठानां मुक्तात्मनामपि ज्योतिष्टोमादिसर्वकर्मारम्भश्रवणात्, **"यद्वै किं च मनुरवदत्तद्भेषजं"** (तै सं. २-२-१०-२) इत्यादिश्रुतौ मन्वादिस्मृतीनामौषधवद्विधेयत्वदर्शनात्, ब्रह्मादीनां लिङ्गधारणदीक्षाविधायकश्रुतिस्मृत्यागमपुराणोपबृंहणाभावात्, **"श्रद्धाभक्तिध्यानयोगादवेहि"** (कैव. १-२) इति कैवल्ये श्रद्धाभक्त्यवच्छिन्नध्यानयोगस्यैव मोक्षसाधनत्वेनोपदेशात्, **"तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय"** (श्वे. ३-८) **"ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये"** (कैव. १-९) इत्यादिश्रुतिषु मोक्षस्य ज्ञानहेतुकत्वोपदेशात्, **"ऐश्वर्यमीश्वरादिच्छेन्मोक्षमिच्छेज्जनार्दनात्"** इत्यादिना जनार्दनस्यैव मोक्षप्रदातृत्वश्रतणात्, **"सर्वलिङ्गं स्थापयति"** इत्यत्र लडन्तत्वेन विध्यभावात्, अनेकविधाने वाक्यभेददोषाच्च. स्थापयतीति धात्वर्थेन स्थावरलिङ्गस्थापनपरत्वद्योतनात्, 'तच्च लिङ्गं पाणिना अभिमन्त्रितं पाणिमन्त्रं' इत्यर्थलाभाच्च,

निर्मलान्तःकरणस्य बाह्यकर्माचरणे प्रयोजनाभावात्, राजनिष्ठश्वेतच्छत्रादिलाञ्छनानां भृत्येष्वदर्शनात्, परमेश्वरनिष्ठगरलभक्षणभुजगभूषणादिधर्माणां भयहेतुत्वेन धर्तुमशक्यत्वात्, मङ्गलाचरणवन्मानाभावेऽपि निखिलवैदिकशिष्टाचाराभावात्, सगुणोपासनस्य निर्गुणसाक्षिचैतन्यप्रापकत्वाभावात्, कामिकादीनामालयोत्सवप्रतिष्ठाद्यंशेष्वेव प्रमाणत्वात्, प्रात्यक्षिकश्रुतिस्मृत्याचारविरुद्धस्य लिङ्गधारणस्य स्मृत्यनवकाशन्यायेन सांङ्ख्यस्मृतिवन्न विधेयत्वं. इति चेत्,

अत्र ब्रूमः- प्रात्यक्षिकश्रुतिस्मृत्यागमपुराणेतिहासविहितत्वेन लिङ्गधारणस्याग्निहोत्रादिवद्वैदिकत्वं सिद्धं. तस्माद्दीक्षानन्तरं ब्रह्मजिज्ञासा विधीयते. "**यश्छन्दसामृषभो विश्वरूपः**" इत्यत्र शिवस्य भक्तोपासनार्थं परिच्छिन्नत्वं युक्तं. नारायणीये "**निधनपतये नमः**" (महाना. अनु. १४) इत्यादिना लिङ्गस्य सर्वात्मकत्वमुक्त्वा '**सर्वलिङ्गँ स्थापयति**' इत्यनेन तस्यैव परिच्छिन्नलिङ्गधारणविधायकत्वदर्शनात्,

> **सर्वाननशिरोग्रीवस्सर्वभूतगुहाशयः ।**
> **सर्वव्यापी स भगवांस्तस्मात्सर्वगतश्शिवः ॥** (श्वे. ३-११)

"**प्राश्वः प्रत्यश्वोऽहं**" (अथर्वशिरः. १) इत्यादिश्वेताश्वतराथर्वशिरःप्रभृतिषु श्रवणाच्च, "**प्राणेष्वन्तर्मनसो लिङ्गमाहुः**" "**लिङ्गे सुषुप्तिः**" "**लिङ्गं ब्रह्म सनातनं**" इत्यथर्वशिरोहंसोपनिषल्लिङ्गपुराणादिषु निरुपपदब्रह्मपदस्य हस्तकरपाणिशब्दवल्लिङ्गपर्यायत्वेन निर्देशात्, "**अमृतस्य देवधारणो भूयासं......श्रुतं मे गोपाय**" इति वाक्ये देवेति पदविभागे अपरिमिताधिकरणन्यायेन सन्निधिश्रुतधारणशब्दान्वयं परित्यज्य व्यवहिते गोपायेत्यत्र अन्वयायोगात्, ब्रह्मणः कोशोऽसीति सन्निहितब्रह्मपदस्यैव विभक्तिविपरिणामेनान्वयसम्भवात्, धारणशब्दस्य संयोगार्थकत्वेन अमृतपदवाच्यस्य मोक्षस्य अन्यथायोगात्,

> **लिङ्गाङ्गसङ्गिनो वत्स ! पुनर्जन्म न विद्यते ।**
> **युगपज्ज्ञानसिद्धिस्स्यात्ततो मोक्षमवाप्नुयात् ॥**

इति **शङ्करसंहितावचनेन** तस्यैव मोक्षोपदेशात्, "**शरीरं मे विचर्षणं**" इत्यादिना बाह्यपदार्थफलविशेषविधानात्, "**अत्याश्रमस्थस्सकलेन्द्रियाणि**" (कैव. ५) "**अत्याश्रमी सर्वदा सकृद्वा जपेत्**" (कैव. २४) "**व्रतमेतत्पाशु-**

पतं पशुपाशविमोक्षाय" (अथर्वशिरः. ५) "व्रतमेतच्छाम्भवं सर्वेषु वेदेषु वेदवादिभिरुक्तं भवति तस्मात् तत्समाचरेन्मुमुक्षुर्न पुनर्भवाय" (कालाग्नि. १) "तेषामेवैतां ब्रह्मविद्यां वदेत" (मुं. ३-२-१०) "तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" (श्वे. ६-२३) इति कैवल्याथर्वशिरःकालाग्निरुद्रमुण्डक-श्वेताश्वतरादिषु पाशुपतव्रतस्थस्यैव ब्रह्मविद्याधिकारित्वोपदेशाच्च लिङ्गधारणदीक्षितस्यैव ब्रह्मविद्याधिकारित्वं सिद्धं ।

ननु— "कैवल्यश्वेताश्वतराद्युपनिषत्सु लिङ्गधारणविधायकवाक्यादर्शनात् पाशुपतव्रतस्य भस्मधारणपरत्वमेव इति चेन्न. पाशुपतदीक्षितस्यैव लिङ्गिनस्तदङ्गत्वेन भस्मधारणविधायकत्वोपदेशात् ,

लिङ्गाङ्गसङ्गिनां चैव पुनर्जन्म न विद्यते ।
एष पाशुपतो योगः पशुपाशनिवृत्तये ॥
सर्ववेदान्तसारोऽयमत्याश्रम इति श्रुतिः ।
परब्रह्माभिधं लिङ्गं पशुपाशविमोचकं ॥
यो धारयति सद्भक्त्या स पाशुपत उच्यते ।
शरीरलितये भक्त्या लिङ्गं परशिवात्मकम् ॥
यो धृत्वा विचरेद्भूमौ स पाशुपत उच्यते ।
लिङ्गं शिवो भवेत् क्षेत्रमङ्गं संयोग आश्रयः ॥
तस्माल्लिङ्गाङ्गसंयुक्तो यस्तु सोऽत्याश्रमी भवेत् ।
ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तु वा ।
यस्तु लिङ्गाङ्गसंयुक्तः स एवात्याश्रमी भवेत् ॥

इत्यादित्यलैङ्गस्कन्दकूर्मपुराणेषु पाशुपतात्याश्रमिशब्दयोर्लिङ्गधारिपर्यायत्वेन निर्देशात् तत्परत्वमेवेति सिध्दं । किञ्च सामजैगीषीयशाखायां सदानन्दोपनिषदि—

अन्तर्धारणशक्तो वा ह्यशक्तो वा द्विजोत्तमः ।
संस्कृत्य गुरुणा दत्तं शैवं लिङ्गमुरस्स्थले ।
धार्यं विप्रेण मुक्त्यर्थमेवं वेदविदो विदुः ॥

अथर्वणे ऐश्वर्यशाखायां—

यो वामहस्तार्चितलिङ्गमेकं परात्परं धारयते सततं विप्रः क्षत्त्रियो वा । तस्यैवलभ्यः परमेश्वरोऽसौ निरञ्जनः परमं साम्यमुपैति दिव्यं ॥

इत्यादिमन्त्रेषु परमेश्वरध्यानधारणमेव मुमुक्षूणां विधेयमिति श्रूयते। रुद्राध्याये—

"अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक्" इत्यनेन परशिवस्यैव जननमरणप्रवाहरूपसंसाररोगनिवारकत्वं सूचितं। अत एव वेदपुरुषेणापि लिङ्गधारणस्यैव पशुपाशविमोचकत्वं ऋग्यजुस्सामादिषूपादिश्यते। ऋग्वेदे—

"अयं मे हस्तो भगवानयं मे भगवत्तरः। अयम्मेविश्वभेषजोऽयं शिवाभिमर्शनः। अयं माताऽयं पिताऽयं जीवातुरागमत्। इदं तव प्रसर्पणं सुबन्धवेहि निरीहि॥" (८-१-२५) इत्यनेन वेदपुरुषस्य पाणिलिङ्गधारणं निर्दिष्टम्। "शिवाभिमर्शनः" इत्यत्र स्थावरलिङ्गस्पर्शो विवक्षित इति चेत्—शिवमभितस्सर्वदा स्पृशतीत्यर्थलाभात् सार्वकालिकस्पर्शान्यथानुपपत्त्या नान्यार्थो युक्तः। एतदेव वातूले श्रूयते—

धारयेद्यस्तु हस्तेन लिङ्गाकारं शिवं सदा।
तस्य हस्तस्थितं विद्धि मत्पदं सम्पदां पदं॥ इति.

अग्न्यवच्छिन्नायःपिण्डस्य तन्निष्ठदाहकत्वप्रकाशकत्वोपदेशवत् लिङ्गधारणेनैव तत्करस्य भगवत्तरत्व-विश्वभेषजत्वादिपरमेश्वरधर्माः प्रतिपाद्यन्ते। तथा कामिके—

अयं मे हस्तो भगवानिति मन्त्रेण सर्वदा।
पाणिलिङ्गधृतिर्वेदपुरुषस्य समीरिता॥ इति.

यजुर्वेदे—

या ते रुद्र शिवा तनूरघोराऽपापकाशिनी।
तया नस्तनुवा शन्तमया गिरिशन्ताभिचाकशीहि॥
(तै. सं ४-५-१-१)

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनं।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्॥
(तै. सं. १-८-६-११)

सोमारुद्रा युवमेतान्यस्मे विश्वा तनूषु भेषजानि धत्तं।
अवस्यतं मुञ्चतं यन्नो अस्ति तनूषु बद्धं कृतमेनो अस्मत्॥
(तै. सं. १-८-२२-४२)

